श्रीकृष्णः—[२०५]प्राप्तः षोडशवत्सरेऽत्र जनितो यः सप्तमे वासरे
दैत्येनापहृतोऽप्यनन्यशरणः श्रीरुक्मिणीनन्दनः ॥
हत्वा शम्बरमुग्रवीर्यमखिलं हृत्वा तदीयं धनं
कान्तासंयुत एष ते करुणया, किं वा प्रियं स्यात्ततः ? ॥१०९॥

किञ्च—साम्बो जाम्बवतीसुतोपि कुरुभिर्बद्धो निजे पत्तने
जित्वा तान् कुरुराजराजतनयायुक्तः समभ्यागतः ॥
एता आप्तसुपुत्ररत्नदशकाः सर्वा महिष्यो हि मे
देव ! त्वद्दययोदयश्च विजयः किन्नः प्रियं स्यात्ततः ? ॥११०॥

चरणकमलरेखाचक्रतश्चक्रमुग्रं ॥
दिनकरनियुताभं संविधायाशु शम्भो ॥
सपदि करतले मेऽभ्यर्पितं विश्वरक्षां
रचयितुमिह तस्मात्किंपरं नः प्रियं स्यात् ? ॥ १११ ॥

तथापीदमस्तु भरतवाक्यम् ।

---

इति धनञ्जयोक्तलक्षणलक्षितः काव्यार्थस्य संहरणात् काव्यसंहार इति प्रसिद्धं चरमं नाट्याङ्गमुपनिबध्नाति कविर्नाट्यसम्प्रदायमनुरुन्धानः ।

( २०५ ) श्रीशङ्करोदीरितं बहुमन्यमानः श्रीकृष्णो वरणीयशेषाभावमाभाष्य सिद्धे सकले निजाभ्युदयमनूद्य निखिलजगतां कल्याणमाशास्ते—प्राप्त इत्यादिना । अत्र द्वारकायां जनितो यः सप्तम एव वासरे दैत्येनापहृतः श्रीशङ्करं भवन्तमन्तरेण अन्यशरणरहितः श्रीरुक्मिणीनन्दनः प्रद्युम्नः, उग्रवीर्यं शम्बरं हत्वा, अखिलं तदीयं धनं हृत्वा, एषः पुरोऽवस्थितः षोडशवत्सरे (समये व्यतीते ) ते करुणया प्राप्तः; ततः परमधिकं किञ्चोऽस्माकमन्यत् प्रियं स्यात् । किञ्च—साम्बो जाम्बवतीसुतोपि कुरुभिर्निजे पत्तने बद्धस्तद्बन्धनाद् विमुक्तस्तान् कुरून् जित्वा कुरुराजराजतनयया हरणप्राप्तया युक्तः समागतः, एताश्च सर्वा मे महिष्यो राज्ञ्यः प्रत्येकमाप्तसुपुत्ररत्नदशका जाताः, सोयं सर्वोपि हे देव त्वद्दयया उदयो विजयश्च वरीवर्ति; ततः परमधिकं किं नः प्रियं स्यात् । अपिच—हे शम्भो ! चरणकमलरेखाचक्रत उग्रं दिनकरनियुताभं आशु चक्रमुत्पाद्य मे करतले सहसाऽभ्यर्पितं । किमर्थमित्याह—विश्वरक्षां रचयितुमिह लोके इति शेषः । तस्मात्परमधिकं नः प्रियं किं स्यात् ! न किमप्यवशिष्यत इत्यर्थः । तथापीदमस्तु भरतवाक्यम् । अम्बुधरा वर्षन्तु यथाकाममिति शेषः, धरा च यत्र बीजप्ररोहाद्यनुकूलाऽत एव सदासुखमानां धान्यानां शाल्यादीनां सम्पदं धत्तीति तथा

वर्षन्त्वम्बुधरा धराऽस्तु च वरा सद्धान्यसम्पद्धरा
सन्तु श्रीसुखिनो नृपाश्च सुखिनी भूपालभक्ता प्रजा ॥
सर्वेषां शिवमस्तु विश्वमखिलं हृष्टं च पुष्टं सदा
कारुण्यामृतसागरौ हरिहरावानन्ददौ स्तां च नः ॥ ११२ ॥

( निष्क्रान्ताः सर्वे )

इति श्रीमत्केशवगुरुकृपाकल्पवल्लरीपल्लवायमाने महामहोपाध्याय-
श्रीप्रकविशङ्करलालकृतौ श्रीकृष्णचन्द्राभ्युदयनाम्नि नाटके
पञ्चमोऽङ्को नाटकं च समाप्तिमगमत् ॥

दीपोत्सवे पश्चिमरात्रभागेऽभवत्सुपूर्णं मम मानसे यत् ।
गुरोः प्रसादेन महेश्वरस्य श्रीकेशवस्यापि च मे दयाब्धेः ॥ १ ॥
पूर्णं पुनर्लेखविधौ तदेतद्धरेः प्रबोधाहनि सौम्यवारे ।
नन्दाङ्कनन्देन्दुमिते सुवर्षे कृष्णोदयं श्रीदयया गुरूणाम् ॥ २ ॥
श्रीकृष्णचन्द्राभ्युदयाह्वयं नाटकमर्प्यते । मया श्रीकृष्णचन्द्राय महेश्वरपरात्मने ३॥
श्रीकृष्णचन्द्राभ्युदयं दृष्ट्वा दृष्ट्या दयार्द्रया। श्रीकृष्णचन्द्रो भूयान्नः सर्वदाभ्युदयप्रदः
आहिच्छत्रकुलैकभूषणमणेः पुत्रो महेशस्य यः
श्रीमत्केशवशास्त्रिसद्गुरुकृपालोकैकपात्रं च यः ॥
यस्यात्मैव वपुर्धरः प्रियसुहृद्रत्नं जटाशङ्कर-
स्तस्येयं कृतिरातु तुष्यतु तथा श्रीशैलजावल्लभः ॥ ५ ॥

---

विधास्तु; नृपाश्च श्रिया सुखिनः सन्तु, तदीया प्रजा च भूपालभक्ता सती सुखिनी भवतु, प्रजायाः सुखित्वे परमं कारणं राजभक्तिरिति सैवात्र पुरस्कृता; सर्वेषां शिवमस्तु, अखिलं विश्वं सदा हृष्टं पुष्टं चास्तु, करुणामृतसागरौ च हरिहरौ नोऽस्माकमानन्ददौ स्तां भूयास्तामित्याशीर्वचनान्तोऽपवर्गः ।

इति श्रीसद्गुरुवर्यकेशवकृपाकल्पवल्लरीपल्लवायमानश्रीकृष्णचन्द्राभ्युदय-
नाम्नो नाटकस्य टीकायां ज्योत्स्नाभिधायां परममाहेश्वरहरिशङ्करात्मज-
पण्डितहाथीभाईप्रणीतायां पञ्चमोऽङ्कः समाप्तः ॥

संवद्गुणाश्वनन्देन्दौ माघशुक्लाष्टमीदिने । श्रीजामनगरे टीका भौमवारे समापिता ॥

---

यः ख्यातो हरिशङ्करात्मज इति श्रैविद्यमोढद्विजो
यश्चाऽकारि नरेन्द्रजामरणजित्सिंहैः सभापण्डितः ॥
सम्राट्पञ्चमजोर्जतोऽपि लभते यः सत्क्रियां मानदां-
हाथीभाइपदाभिधः कृतिरियं तस्याऽस्तु शर्वार्पिता ॥

---